देवी दानादिगुणयुक्ता वाजिनीवती वाजोन्नंयस्यांक्रियायांसावाजिनी तद्युक्ता धीनां ध्यातॄणांस्तोतॄणांअवित्रीरक्षित्री एवंभूतासरस्वती वाजेभिरन्नैर्नोस्मान्प्रावतुप्रकर्षेणतर्पयतु ॥ ४ ॥

अथपंचमी–

यस्त्वादेविसरस्वत्युपब्रूतेधनेहिते । इन्द्रंनवृत्रतूर्ये ॥ ५ ॥ ३० ॥

यः । त्वा । देवि । सरस्वति । उपऽब्रूते । धने । हिते । इन्द्रम् । न । वृत्रऽतूर्ये ॥ ५ ॥ ३० ॥

हेदेवि सरस्वतिं यःस्तोतावृत्रतूर्येसंग्रामेधनेहितेनिहितेनिमित्तभूतेसति इन्द्रंनइन्द्रमिवत्वां उपब्रूते स्तौति तंरक्षेतिशेषः ॥ ५ ॥

॥ इतिचतुर्थस्याष्टमेत्रिंशोवर्गः ॥ ३० ॥

अथषष्ठी–

त्वंदेविसरस्वत्यवावाजेषुवाजिनि । रदापूषेवनःसनिम् ॥ ६ ॥

त्वम् । देवि । सरस्वति । अव । वाजेषु । वाजिनि । रद । पूषाऽइव । नः । सनिम् ॥ ६ ॥

हेदेवि दानादिगुणयुक्ते हेवाजिनि वाजोबलमन्नंवातद्युक्तेहेसरस्वति त्वंवाजेषुसंग्रामेषुअव अस्मानक्ष । अपिच नोस्मभ्यंपूषेवपोषकोदेवइव सनिंसंभजनीयंधनंरद विलिख प्रयच्छे- तियावत् ॥ ६ ॥

अथसप्तमी–

उतस्यानःसरस्वतीघोराहिरण्यवर्तनिः । वृत्रघ्नीवष्टिसुष्टुतिम् ॥ ७ ॥

उत । स्या । नः । सरस्वती । घोरा । हिरण्यऽवर्तनिः । वृत्रऽघ्नी । वष्टि । सुऽस्तुतिम् ॥ ७ ॥

उतअपिच स्यासाप्रसिद्धासरस्वती घोराशत्रूणांभयकारिणी हिरण्यवर्तनिः वर्ततेअनेने- तिवर्तनिःरथःहिरण्मयोवर्तनिर्यस्याःसातथोक्ता वृत्रघ्नी वृत्राणांशत्रूणांहंत्री एवंभूतासासरस्वती नोस्मदीयांसुष्टुतिं शोभनांस्तुतिंवष्टिकामयतां ॥ ७ ॥

अथाष्टमी—

यस्याअनन्तोअह्रुतस्त्वेषश्चरिष्णुरर्णवः । अमश्चरतिरोरुवत् ॥८॥

यस्याः । अनन्तः । अह्रुतः । त्वेषः । चरिष्णुः । अर्णवः । अमः । चरति । रोरुवत् ॥ ८ ॥

यस्याःसरस्वत्याः अमोबलंअनन्तः अपर्यन्तः अपरिमितः अह्रुतः अहिंसितः अकुटिलोवात्वेषोदीप्तः चरिष्णुः चरणशीलः सर्वत्रामविहतगतिरित्यर्थः अर्णवः उदकवान्उदकप्रदइत्यर्थः एवंभूतःसन् रोरुवदभृशंशब्दंकुर्वन्चरति वर्तते । सानोविश्वाइत्युत्तरत्रसंबन्धः ॥८॥

अथनवमी—

सानोविश्वाअतिद्विषःस्वसॄरन्याऋतावरी । अतन्नहेवसूर्यः ॥९॥

सा । नः । विश्वाः । अति । द्विषः । स्वसॄः । अन्याः । ऋतऽवरी । अतन् । अहाऽइव । सूर्यः ॥ ९ ॥

सासरस्वतीनोस्मान्विश्वाःसर्वाद्विषोद्वेष्ट्रीःप्रजाःअतिनयतु अतितारयतु तथास्वसॄः स्वयंसारिणीः सहोत्पन्नावा ऋतावरी ऋतमित्युदकनाम तद्युक्ताअन्याश्चनदीः अस्मानअतिनयतु यद्वा जस्येव वाच्छन्दसीतिपूर्वसवर्णदीर्घः उदकवत्यःस्वसारोभगिन्योअन्याःगंगाद्यानद्यश्चअस्मान शत्रूनतिनयन्तु तत्रदृष्टान्तः—सूर्यःसर्वस्यप्रेरकआदित्यः अतन्सततंगच्छन् अहेवअहानीवयथाअहानिशीघ्रमतिनयतितद्वत् ॥ ९ ॥

दशरात्रेतृतीयेहनिप्रउगेउतनःप्रियेतिसारस्वतस्तृचः सूत्रितंच—उतनःप्रियाप्रियास्वित्यौष्णिहंप्रउगमिति । पवित्रेष्ट्यांउतनःप्रियेतिसारस्वतस्यहविषोनुवाक्या सूत्रितंच—उतनः प्रियाप्रियास्विमाजुह्वानायुष्मदानमोभिरिति ।

तृचेप्रथमासूक्तेदशमी—

उतनःप्रियाप्रियासुसप्तस्वसासुजुष्टा । सरस्वतीस्तोम्याभूत् ॥१०॥३१॥

उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा । सुऽजुष्टा । सरस्वती । स्तोम्या । भूत् ॥ १० ॥ ३१ ॥

उतअपिच नोस्माकंप्रियासुप्रियाणांमध्येप्रियाप्रियतमा सप्तस्वसागायत्र्यादीनिच्छंदांसि स्वसारोयस्यास्तादृशी नदीरूपायास्तुगंगायाःसप्तनद्यः स्वसारः सुजुष्टाः सुष्ठुपुरावनैर्ऋषिभिः सेविता एवंभूतासरस्वतीदेवीस्तोम्याभूत् स्तोतव्याभवतु ॥ १० ॥

॥ इतिचतुर्थस्याष्टमेएकत्रिंशोवर्गः ॥ ३१ ॥

अथैकादशी–

आपप्रुषीपार्थिवान्युरुरजोअन्तरिक्षम् । सरस्वतीनिदस्पातु ॥ ११ ॥

आऽपप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् । सरस्वती । निदः । पातु ॥ ११ ॥

पार्थिवानि पृथिव्याःसंबन्धीनि उरुउरूणि विस्तीर्णानि रजोरजांसिलोकान्अन्तरिक्षं अन्तरालान्तंनभश्च आपप्रुषी स्वतेजसापूरितवती । सरस्वतीदेवी निदःनिन्दकाच्छत्रोः पातु अस्मान्रक्षतु ॥ ११ ॥

अथद्वादशी–

त्रिषधस्थासप्तधातुःपञ्चजातावर्धयन्ती । वाजेवाजेहव्याभूत् ॥ १२॥

त्रिऽसधस्था । सप्तऽधातुः । पञ्च । जाता । वर्धयन्ती । वाजेऽवाजे । हव्या । भूत् ॥ १२ ॥

त्रिषधस्था त्रिषुलोकेषुसहावतिष्ठमाना त्रिलोकव्यापिनी सप्तधातुःसप्तधातवोवयवाः गायत्र्याद्यागंगाद्यावायस्याःसातथोक्ता पंचजाताजातानिनिषादपंचमांश्चतुरोवर्णान्गंधर्वादीन्वा वर्धयन्ती अभिवृद्धान्कुर्वन्ती ईदृशीसरस्वती वाजेवाजे युद्धेयुद्धेसर्वेषुयुद्धेषु हव्याभूद्ह्वातव्या भवति ॥ १२ ॥

अथत्रयोदशी–

प्रयामहिम्नामहिनासुचेकितेद्युम्नेभिरन्याअपसामपस्तमा ।
रथइवबृहतीविभ्वनेकृतोपस्तुत्याचिकितुषासरस्वती ॥ १३ ॥

प्र । या । मुहिम्ना । मुहिना । आसु । चेकिते । द्युम्नेभिः । अन्याः । अपसाम् । अपःऽतमा । रथःऽइव । बृहती । विऽभ्वने । कृता । उपऽस्तुत्या । चिकितुषा । सरस्वती ॥ १३ ॥

महिम्नामाहात्म्येनमहिनामहती द्युम्नेभिःद्युम्नैर्द्योतमानैःयशोभिरन्नैर्वायुक्तासती आसु आसांनदीनांदेवतानांमध्येयासरस्वतीप्रचेकिते प्रकर्षेणज्ञायते । याचअन्याःअन्यासां सुपांसुलुगितिषष्ठीबहुवचनस्यजस् अपसांवेगवतीनांमध्येअपस्तमावेगवत्तमा , याचरथइवविभ्वनेविभुत्वायबृहती परिवृढा गुणैरधिकाकृता प्रजापतिनानिर्मिता,सासरस्वतीचिकितुषा जानतास्तोत्रा उपस्तुत्याउपस्तोतव्याभवति ॥ १३॥

अथचतुर्दशी—

सरस्वत्यभिनोनेषिवस्योमापस्फरीःपयसामानआधक् ।
जुषस्वनःसख्यावेश्याचमात्वत्क्षेत्राण्यरणानिगन्म ॥१४॥३२॥

सरस्वति । अभि । नः । नेषि । वस्यः । मा । अप । स्फरीः । पयसा । मा । नः । आ । धक् । जुषस्व । नः । सख्या । वेश्या । च । मा । त्वत् । क्षेत्राणि । अरणानि । गन्म ॥ १४ ॥ ३२ ॥

हेसरस्वति नोस्मान्वस्योवसीयः प्रशस्तंवसुधनंअभिनेषि अभिप्रापय मापस्फरीः अप्रवृद्धान्माकार्षीः । स्फारोवृद्धिः उपसर्गवशात्तद्विपरीतेवर्तते तथापयसोदकेनअधिकेननोस्मान्माआधक् नाभिदह नवाधस्व । अपिचनोस्माकंसख्यासख्यानिसखिकर्माणिवेश्याप्रवेशनानिचजुषस्व सेवस्व । वयंचत्वत्सकाशात्अरणानिअरमणानिनिकृष्टानिक्षेत्राणिमागन्म माप्राप्नवाम अपितुरमणीयान्येव ॥ १४ ॥

॥ इतिचतुर्थस्याष्टमेद्वात्रिंशोवर्गः ॥ ३२ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेअष्टमोध्यायः समाप्तः ॥ ८ ॥

॥ चतुर्थाष्टकः समाप्तः ॥ ४ ॥